# चम्पूरामायणे

# बालकाण्डम्

३५ –१७.०९.२०१८

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam • Value Education • Technology



# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# पुनरावर्तनम्

- अहल्यावृत्तान्तः
  - अत्रागमद्गौतमधर्मदारान्
  - वनमेतद्गते रामे
  - इत्थं विदितवृत्तान्ते
  - तदेनामेनसो मुक्ताम्
  - दुःखे सुखे च

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

# तस्मिन्नहल्यया गौतमेन च कृतमातिथ्यं विश्वामित्रः सराजपुत्रः प्रतिगृह्य मिथिलोपकण्ठभुवि जनकयजनभवनमभजत।

- तस्मिन्, अहल्यया, गौतमेन, च, कृतम्, आतिथ्यम्, विश्वामित्रः, स-राज-पुत्रः, प्रतिगृह्य, मिथिला-उपकण्ठ-भुवि, जनक-यजन-भवनम्, अभजत
- तस्मिन् = गौतममहर्षेः आश्रमपदे
- अहल्यया = स्वरूपं प्राप्तया गौतमपत्न्या
- गौतमेन च
- कृतम् = विहितम्
- आतिथ्यम् = उपचारम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

तस्मिन्नहल्यया गौतमेन च कृतमातिथ्यं विश्वामित्रः सराजपुत्रः प्रतिगृह्य मिथिलोपकण्ठभुवि जनकयजनभवनमभजत।

- प्रतिगृह्य = अङ्गीकृत्य
- विश्वामित्रः = कौशिकः
- सराजपुत्रः = रामलक्ष्मणाभ्यां सहितः
- मिथिलोपकण्ठभुवि = मिथिलानगरस्य प्रान्तभूमौ
- जनकयजनभवनम् = राज्ञः जनकस्य यागशालाम्
- अभजत = अवाप

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# तस्मिन्नहल्यया गौतमेन च कृतमातिथ्यं विश्वामित्रः सराजपुत्रः प्रतिगृह्य मिथिलोपकण्ठभुवि जनकयजनभवनमभजत।

- तात्पर्य्यम् – कौशिकः गौतममहर्षेः आश्रमपदे, स्वरूपं प्राप्तया अहल्यया गौतमेन च विहितम् उपचारम् अङ्गीकृत्य, रामलक्ष्मणाभ्यां सह मिथिलानगरस्य प्रान्तभूमौ जनकराजस्य यागशालां प्राप्तवान् ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam - Value Education - Technology

# तस्मिन्नहल्यया गौतमेन च कृतमातिथ्यं विश्वामित्रः सराजपुत्रः प्रतिगृह्य मिथिलोपकण्ठभुवि जनकयजनभवनमभजत।

- तस्मिन्नहल्यया - तस्मिन् + अहल्यया - ङमुडागमसन्धिः
- प्रतिगृह्य - प्रति + "ग्रह-उपादाने" + ल्यप्
- मिथिलोपकण्ठभुवि - कण्ठस्य समीपम् उपकण्ठम् , उपकण्ठं भूः उपकण्ठभूः, मिथिलायाः उपकण्ठभूः मिथिलोपकण्ठभूः, तस्याम् मिथिलोपकण्ठभुवि । ऊकारान्तः, स्त्री, ७.१
- अभजत – "भज सेवायाम्" – लङ्, प्रथम.१

Vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# तदनु जनकेन विधिवदभ्यर्चिते तस्मिन्निमिकुलपुरोधाः शतानन्दो रघुनन्दनमेवमभाषत।

- तत्-अनु, जनकेन, विधिवत्, अभ्यर्चिते, तस्मिन्, निमि-कुल-पुरोधाः, शतानन्दः, रघुनन्दनम्, एवम्, अभाषत
- तदनु = तदनन्तरम्
- तस्मिन् = विश्वामित्रे
- जनकेन = जनकराजेन
- विधिवत् = यथाविधि

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# तदनु जनकेन विधिवदभ्यर्चिते तस्मिन्निमिकुलपुरोधाः शतानन्दो रघुनन्दनमेवमभाषत।

- अभ्यर्चिते = पूजिते सति
- निमिकुलपुरोधाः = जनकवंशस्य पुरोहितः
- शतानन्दः = शतानन्दमहर्षिः (अहल्या-गौतमयोः पुत्रः)
- रघुनन्दनम् = रघुकुलसम्भूतं रामचन्द्रम्
- एवम् = इत्थम्
- अभाषत = अवोचत्

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education - Technology

# तदनु जनकेन विधिवदभ्यर्चिते तस्मिन्निमिकुलपुरोधाः शतानन्दो रघुनन्दनमेवमभाषत।

- तात्पर्य्यम् – तत्र जनकमहाराजेन विश्वामित्रे यथाविधि पूजिते सति, जनकवंशपुरोहितः शतानन्दः राघवम् इदम् अब्रवीत्।
- अभ्यर्चितः - अभि + “अर्च पूजायाम्” + क्त
- निमिकुलपुरोधाः - निमेः कुलं निमिकुलम् , निमिकुलस्य पुरोधाः निमिकुलपुरोधाः। सकारान्तः, पुं, १.१ ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- तिष्ठन्, क्षत्र-अर्ह-वृत्तौ, मुनिः, अगमत्, असौ, आश्रमम्, ब्रह्म-सूनोः, आतिथ्यम्, तत्र, लब्ध्वा, निरवधि, सुरभेः, प्राभवात्, इति, अवेत्य, सा, तेन, प्रार्थिता, अभूत्, तत्-अनु, मुनिवरे, न, अभ्युपेते, चकर्ष, क्रोशन्तीम्, ताम्, तया, एव, प्रचुर-बल-जुषा, कान्दिशीकः, बभूव

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- अगमत् = अगच्छत्
- कः अगमत्? असौ मुनिः = विश्वामित्रः
- कथम्भूतः सन् अगमत्? तिष्ठन् = विद्यमानः
- कस्यां तिष्ठन्? क्षत्रार्हवृत्तौ = क्षत्रियोचितधर्मे
- कुत्र अगमत्? आश्रमम् = तपोवनम्
- कस्य आश्रमम्? ब्रह्मसूनोः = ब्रह्मपुत्रस्य वसिष्ठस्य

vyoma
Samskritam-Value Education-Technology

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- अभूत् = आसीत्
- का अभूत्? सा = कामधेनुः
- कथम्भूता अभूत्? प्रार्थिता = याचिता
- केन प्रार्थिता? तेन = कौशिकेन

vyoma
Samskritam - Value Education Technology

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- किं कृत्वा? लब्ध्वा = अवाप्य
- किं लब्ध्वा? आतिथ्यम् = आतिथिसत्कारम्
- कीदृशम् आतिथ्यम्? निरवधि = निस्सीमम्
- कुत्र लब्ध्वा? तत्र = वसिष्ठमहर्षेः आश्रमे

vyoma
Samskritam - Value Education - Technology

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- पुनः किं कृत्वा? अवेत्य = बुद्ध्वा
- किमिति अवेत्य? प्राभवात् इति = माहात्म्यात् इति
- कस्याः प्राभवात्? सुरभेः = कामधेनोः

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- तदनु = ततः
- चकर्ष = कृष्टवान्
- कां चकर्ष? ताम् = कामधेनुं
- कीदृशीं ताम्? क्रोशन्तीम् = आक्रन्दमानाम्
- कदा चकर्ष? मुनिवरे न अभ्युपेते [सति] = वसिष्ठमहर्षौ न अङ्गीकृतवति

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- [ततः]
- बभूव = अभवत्
- कीदृशः बभूव? कान्दिशीकः = भयद्रुतः
- कया बभूव? तया एव = कामधेन्वैव
- कीदृश्या तया? प्रचुरबलजुषा = भूरिशः सेनाबलेन युक्तया

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- अन्वयः – असौ मुनिः क्षत्रार्हवृत्तौ तिष्ठन् ब्रह्मसूनोः आश्रमम् अगमत् । तत्र निरवधि आतिथ्यं लब्ध्वा, सुरभेः प्राभवात् इति अवेत्य सा तेन प्रार्थिता अभूत् । तदनु मुनिवरे न अभ्युपेते क्रोशन्तीं तां चकर्ष । तया एव प्रचुरबजलजुषा कान्दिशीकः बभूव ।

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- तात्पर्य्यम् – अयं मुनिः विश्वामित्रः क्षत्रधर्मम् आचरन् कदाचित् ब्रह्मपुत्रस्य वसिष्ठस्य आश्रमपदमगच्छत्। तत्र महर्षिणा समर्पितं निस्सीमम् अतिथिसत्कारं सर्वमपि तत्रस्थायाः कमधेनोः बलादेव साध्यमभूदिति बुद्ध्वा, तेन सा धेनुः याचिता। वसिष्ठमहर्षौ न अङ्गीकृतवति, सः ताम् आक्रन्दमानां धेनुं बलात् कृष्टवान्, किन्तु तया सृष्टेन भूरिसेनाबलेन भयद्रुतोऽभूत्।

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- तिष्ठन् - " ष्ठा गतिनिवृत्तौ " + शतृ, तकारान्तः, पुं, १.१
- क्षत्रार्हवृतौ - क्षत्राणाम् अर्हः क्षत्रार्हः, क्षत्रार्हा वृत्तिः, तस्याम् । इकारान्तः, स्त्री, ७.१
- ब्रह्मसूनोः - ब्रह्मणः सूनुः ब्रह्मसूनुः, तस्य । उकारान्तः, पुं, ६.१
- आतिथ्यं - अतिथेरिदम् – अतिथि + ष्यञ् (तद्धितः)

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- निरवधि - निर्गतम् अवधेः। पञ्चमीतत्पुरुषः ।
- अवेत्य - अव + " इण् गतौ " + ल्यप्
- अभ्युपेते - अभि + उप + " इण् गतौ " + क्त
- चकर्ष - " कृष विलेखने" , लिट्, प्रथम.१

तिष्ठन्क्षत्रार्हवृत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो-
रातिथ्यं तत्र लब्ध्वा निरवधि सुरभेः प्राभवादित्यवेत्य।
सा तेन प्रार्थिताभूत्तदनु मुनिवरे नाभ्युपेते चकर्ष
क्रोशन्तीं तां तयैव प्रचुरबलजुषा कान्दिशीको बभूव॥९५॥

- क्रोशन्तीम् - " क्रुश आह्वाने " + शतृ + ङीप् । ईकारान्तः, स्त्री, २.१
- प्रचुरबलजुषा - प्रचुरं बलं प्रचुरबलम्, प्रचुरबलस्य जुट् प्रचुरबलजुट्, तया। षकारान्तः, स्त्री, ३.१
- कान्दिशीकः – "कान्दिशीको भयद्रुतः" (अमरः)
- स्रग्धरावृत्तम् – २१ अक्षराणि । "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" – म-र-भ-न-य-य-य गणाः, ७+७+७ यतिः

बहुशस्तद्बलचकितस्य तपोबलाधिगतविविधायुधनिगमस्य भूयोऽपि सुरभिनिमित्तं समारब्धसमरस्य दिव्यास्त्रपरम्परां ब्रह्मदण्डेन निरुन्धन्नरुन्धतीजानिरवतस्थे।

- बहुशः, तत्-बल-चकितस्य, तपः-बल-अधिगत-विविध-आयुध-निगमस्य, भूयः, अपि, सुरभि-निमित्तम्, समारब्ध-समरस्य, दिव्य-अस्त्र-परम्पराम्, ब्रह्म-दण्डेन, निरुन्धन्, अरुन्धती-जानिः, अवतस्थे
- बहुशः = बहुधा
- तद्बलचकितस्य = धेन्वाः बलात् विस्मयान्वितस्य

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

बहुशस्तद्बलचकितस्य तपोबलाधिगतविविधायुधनिगमस्य भूयोऽपि सुरभिनिमित्तं समारब्धसमरस्य दिव्यास्त्रपरम्परां ब्रह्मदण्डेन निरुन्धन्नरुन्धतीजानिरवतस्थे।

- तपोबलाधिगतविविधायुधनिगमस्य = तपसा नानाविधानि अस्त्राणि प्राप्तवतः
- सुरभिनिमित्तम् = कामधेन्वर्थम्
- भूयः अपि = पुनरपि
- समारब्धसमरस्य = आरब्धयुद्धस्य

बहुशस्तद्बलचकितस्य तपोबलाधिगतविविधायुधनिगमस्य भूयोऽपि सुरभिनिमित्तं समारब्धसमरस्य दिव्यास्त्रपरम्परां ब्रह्मदण्डेन निरुन्धन्नरुन्धतीजानिरवतस्थे।

- दिव्यास्त्रपरम्पराम् = अस्त्रसमूहम्
- ब्रह्मदण्डेन = ब्रह्मतेजोमयेन दण्डेन
- निरुन्धन् = निवारयन्
- अरुन्धतीजानिः = अरुन्धतीपतिः वसिष्ठः
- अवतस्थे = तस्थौ

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

बहुशस्तद्बलचकितस्य तपोबलाधिगतविविधायुधनिगमस्य भूयोऽपि सुरभिनिमित्तं समारब्धसमरस्य दिव्यास्त्रपरम्परां ब्रह्मदण्डेन निरुन्धन्नरुन्धतीजानिरवतस्थे।

- तात्पर्य्यम् – धेन्वाः प्रभावेण आश्चर्यान्वितः कौशिकः तप आचर्य बहूनि दिव्यास्त्राणि सम्पाद्य पुनरपि कामधेनोः निमित्तं युद्धम् आरब्धवान् । तदा तस्य समग्रमपि आयुधसमूहं स्वस्य ब्रह्मदण्डमात्रेण वसिष्ठः निवारयामास ।

बहुशस्तद्बलचकितस्य तपोबलाधिगतविविधायुधनिगमस्य भूयोऽपि सुरभिनिमित्तं समारब्धसमरस्य दिव्यास्त्रपरम्परां ब्रह्मदण्डेन निरुन्धन्नरुन्धतीजानिरवतस्थे।

- तद्बलचकितस्य – तस्याः बलम् तद्बलम्, तद्बलेन चकितः तद्बलचकितः, तस्य।
- तपोबलाधिगतविविधायुधनिगमस्य – तपसः बलं तपोबलम्, तपोबलेन अधिगतः तपोबलाधिगतः, विविधानाम् आयुधानां निगमः विविधायुधनिगमः, तपोबलाधिगतः विविधायुधनिगमः येन सः, तस्य।
- सुरभिनिमित्तम् – सुरभेः निमित्तम्।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# बहुशस्तद्बलचकितस्य तपोबलाधिगतविविधायुधनिगमस्य भूयोऽपि सुरभिनिमित्तं समारब्धसमरस्य दिव्यास्त्रपरम्परां ब्रह्मदण्डेन निरुन्धन्नरुन्धतीजानिरवतस्थे।

- समारब्धसमरस्य – समारब्धः समरः येन सः, तस्य।
- दिव्यास्त्रपरम्पराम् – दिव्यानि अस्त्राणि दिव्यास्त्राणि, दिव्यास्त्राणां परम्परा, ताम्।
- निरुन्धन् – नि + “ रुधिर् आवरणे ” + शतृ, तकारन्तः, पुं, १.१
- अरुन्धतीजानिः – अरुन्धती जाया यस्य सः। “जायाया निङ्”।
- अवतस्थे – अव + “ ष्ठा गतिनिवृत्तौ ”, लिट्, १.१, “समवप्रविभ्यः स्थः” इति आत्मनेपदम्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# ततोऽयं जातव्यलीकः क्षात्रतेजसः परं ब्राह्ममेव महो महीय इति निश्चित्य तत्सिद्धये दक्षिणस्यां दिशि तीव्रतरं तपश्चचार।

- ततः, अयम्, जात-व्यलीकः, क्षात्र-तेजसः, परम्, ब्राह्मम्, एव, महः, महीयः, इति, निश्चित्य, तत्-सिद्धये, दक्षिणस्याम्, दिशि, तीव्रतरम्, तपः चचार
- ततः = तदनन्तरम्
- अयम् = असौ कौशिकः
- जातव्यलीकः [सन्] = दुःखमनुभवन्

ततोऽयं जातव्यलीकः क्षात्रतेजसः परं ब्राह्ममेव महो महीय इति निश्चित्य तत्सिद्धये दक्षिणस्यां दिशि तीव्रतरं तपश्चचार।

- क्षात्रतेजसः = क्षत्रसंबन्धिबलात्
- परम् = अत्यन्तम्
- ब्राह्मम् = ब्रह्मसंबन्धि
- महः = बलम्
- एव = हि

ततोऽयं जातव्यलीकः क्षात्रतेजसः परं ब्राह्ममेव महो महीय इति निश्चित्य तत्सिद्ध्ये दक्षिणस्यां दिशि तीव्रतरं तपश्चचार।

- महीयः = शक्तियुक्तः
- इति = एवम्
- निश्चित्य = मनसि निधाय
- तत्सिद्ध्ये = ब्राह्मबलसिद्ध्ये

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam · Value Education · Technology

ततोऽयं जातव्यलीकः क्षात्रतेजसः परं ब्राह्ममेव महो महीय इति निश्चित्य तत्सिद्धये दक्षिणस्यां दिशि तीव्रतरं तपश्चचार।

- दक्षिणस्याम् दिशि = दक्षिणदिग्भागे
- तीव्रतरम् = अत्युग्रम्
- तपश्चचार = तपः अकरोत्

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam - Value Education - Technology

ततोऽयं जातव्यलीकः क्षात्रतेजसः परं ब्राह्ममेव महो महीय इति निश्चित्य तत्सिद्धये दक्षिणस्यां दिशि तीव्रतरं तपश्चचार।

- धिग् बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् ।
- एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥१.५६.२३॥
- तदेतत् समवेक्ष्याहं प्रसन्नेन्द्रियमानसः ।
- तपो महत् समास्थास्ये यद्वै ब्रह्मत्वकारणम् ॥१.५६.२४॥

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

ततोऽयं जातव्यलीकः क्षात्रतेजसः परं ब्राह्ममेव महो महीय इति निश्चित्य तत्सिद्धये दक्षिणस्यां दिशि तीव्रतरं तपश्चचार।

- तात्पर्य्यम् – तदनन्तरं विश्वामित्रमुनिः दुःखितस्सन् क्षत्रबलापेक्षया ब्रह्मबलमेव वरम् इति विचिन्त्य, ब्रह्मबलसिद्ध्यर्थं दक्षिणदिग्भागे अत्युग्रं तप अकरोत्।
- जातव्यलीकः – जातं व्यलीकं यस्य सः। “पीडार्थेऽपि व्यलीकं स्यात्” (अमरः)
- क्षात्रतेजसः – क्षात्रं तेजः, तस्मात् । सकारान्तः, नपुं, ५.१

ततोऽयं जातव्यलीकः क्षात्रतेजसः परं ब्राह्ममेव महो महीय इति निश्चित्य तत्सिद्धये दक्षिणस्यां दिशि तीव्रतरं तपश्चचार।

- महीयः – महस् + ईयसुन् – सकारान्तः, नपुं, १.१
- दिशि – शकारान्तः, स्त्री, ७.१ । "दिशस्तु ककुभः काष्ठाः" (अमरः)
- चचार – "चर गतौ" लिट्, १.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अथ सावित्रः क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिमभ्यर्थयमानो वसिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निर्बन्धकुपितै-र्दत्तचण्डालभावस्तमेनं शरणमभजत।

- अथ, सावित्रः, क्षत्रियः, त्रिशङ्कुः, स-शरीरः, स्वर्ग-सिद्धिम्, अभ्यर्थयमानः, वसिष्ठेन, प्रत्याख्यातः, तस्य, पुत्रैः, महोदय-आदिभिः, निर्बन्ध-कुपितैः, दत्त-चण्डाल-भावः, तम्, एनम्, शरणम्, अभजत
- अथ = विश्वामित्रे तपश्चरति

अथ सावित्रः क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिमभ्यर्थयमानो वसिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निर्बन्धकुपितै-र्दत्तचण्डालभावस्तमेनं शरणमभजत।

- सावित्रः = सूर्यवंशजः
- क्षत्रियः = राजन्यः
- त्रिशङ्कुः = त्रिशङ्कुनामा राजा
- सशरीरः = देहसहितः

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अथ सावित्रः क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिमभ्यर्थयमानो वसिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निर्बन्धकुपितै-र्दत्तचण्डालभावस्तमेनं शरणमभजत।

- स्वर्ग-सिद्धिम् = सुरलोकप्राप्तिम्
- अभ्यर्थयमानः = कामयमानः
- वसिष्ठेन = कुलगुरुणा
- प्रत्याख्यातः = निराकृतः

अथ सावित्रः क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिमभ्यर्थयमानो वसिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निर्बन्धकुपितै-र्दत्तचण्डालभावस्तमेनं शरणमभजत।

- निर्बन्ध-कुपितैः = बलात्कारेण क्रुद्धैः
- महोदयादिभिः = महोदयप्रभृतिभिः
- तस्य = वसिष्ठस्य
- पुत्रैः = सुतैः

अथ सावित्रः क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिमभ्यर्थयमानो वसिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निर्बन्धकुपितै-र्दत्तचण्डालभावस्तमेनं शरणमभजत।

- दत्त-चण्डाल-भावः = शापेन चाण्डालत्वं प्रापितः
- तम् एनम् = तपस्यन्तं कौशिकम्
- शरणम् = रक्षितारम्
- अभजत = प्राप्तवान्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अथ सावित्रः क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिमभ्यर्थयमानो वसिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निर्बन्धकुपितै-र्दत्तचण्डालभावस्तमेनं शरणमभजत।

- तात्पर्य्यम् – सूर्यवंशस्य राजा त्रिशङ्कुः देहसहितः एव सुरलोकं प्राप्तुम् इच्छन् तदर्थं कुलगुरुं वसिष्ठं प्रार्थयामास । वसिष्ठेन निराकृतः तस्य पुत्रान् बलेन निर्बबन्ध । कुपिताः तत्पुत्राः महोदयादयः त्रिशङ्कुं चाण्डालत्वेन शप्तवन्तः । ततः त्रिशङ्कुः तपस्यन्तं कौशिकं रक्षणार्थम् अयाचत ।

Samskrtam · Value Education · Technology

अथ सावित्रः क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिमभ्यर्थयमानो वसिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निर्बन्धकुपितै-र्दत्तचण्डालभावस्तमेनं शरणमभजत।

- सशरीरः – शरीरेण सहितः
- अभ्यर्थयमानः – अभि+ “अर्थ उपयाच्ञायाम्”+शानच्
- निर्बन्धकुपितैः – निर्बन्धेन कुपिताः, तैः
- दत्तचण्डालभावः – दत्तः चण्डालभावः यस्मै सः

# सङ्क्षेपः

- जनकस्य यागमण्डपं प्राप्ताः विश्वामित्रादयः
- जनकस्य कुलपुरोहितेन शतानन्देन कौशिककथाकथनम्
- सुरभिं प्राप्तुं कौशिकस्य इच्छा
- तपसा दिव्यास्त्राणां प्राप्तिः, वसिष्ठात् पराभवः
- ब्रह्मबलसिद्धये तपश्चरणम्
- त्रिशङ्कोः इच्छा – वसिष्ठेन तत्पुत्रैश्च निराकरणम्, विश्वामित्रम् उपसर्पति त्रिशङ्कुः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in